अभ्यास–

१) निम्नलिखित शब्दों के द्वितीया तृतीया और पंचमी विभक्तियों के रूप लिखिए।

श्री लक्ष्मी, अवी, तरी।

२) निम्नलिखित शब्दो के कारक और वचन लिखिए–

तन्त्र्या, कौमुद्योः, रोहिण्या, देवकीः।

✕ ❁ ✕

# नवत्रिंशः पाठः

## देवी राजीमती

पुराकिल् द्वापरे युगे आसीत् मथुराधिपो भूपतिः उग्रसेनः। तस्य च सुलक्षणी दिव्य–सौन्दर्य–सम्पन्नैका कन्याभवत्। तेन तस्याः नाम राजीमती इति कृतम्।

तस्मिन्नेव काले शौर्यपुरस्य नगरस्य सर्हद्धिको भूपतिः समुद्रविजयः आसीत्। तस्य आसीत् साध्वी धर्मशीला भार्या शिवा। अनयोः एकः धार्मिकः सत्यनिष्ठः सुपुरुषलक्षणैः युक्तः पुत्रोऽभवत्। तस्य नाम अरिष्टनेमिः इति कृतं ताभ्याम्। नेमिकुमारः इति तस्यैव द्वितीयं नाम।

यदारिष्टनेमिः यौवन–सम्पन्नः जातः तदा वासुदेवस्य कृष्णस्यनुमत्या तस्य राजीमत्याश्च विवाहः निश्चितोऽभवत्। यदारिष्टनेमिः वासुदेवेन श्रीकृष्णेन, बलभद्रेण बन्धु–बान्धवैः राजपुरुषैश्च सह रथमारुह्य विवाहार्थं श्वसुरगृहमगच्छत् तदा मार्गे निरीहनेत्रान् पशुशालासु बद्धान् अनेकान् पशून्, पिंजरेषु अवरुद्धान् विविधविधान् खगान् च दृष्ट्वा रथचालकमपृच्छत्।

'कस्मात् एते पशवः खगाश्च अत्र बद्धाः सन्ति ?"

रथचालकोऽवदत्–'एते पशवः खगाश्च तव विवाहोत्सवे आगतानामतिथिनां भक्षणार्थं समानीताः सन्ति, एषां मासमेव यूयं खादिष्यथ।'

दयाशीलः कुमारोऽचिन्तयत्–'अहो कष्टम्! मदर्थं एषां दोषरहितानां जीवानां वधो भविष्यति कोऽपराधः एषां वराकानां।' इति संचित्यारिष्टनेमिः गृहं प्रत्यागच्छत्, तत्रागत्येत्यचिन्तयच्च–

'किमस्त्यस्य संसारस्य रीतिः, जीवो जीवमेव खादत्यत्र, उदर-पूर्तिः एव सर्वेषां लक्ष्यम् असारे अस्मिन्संसारे कोऽस्ति सारः ? अतोऽसारं संसारं परित्यक्ष्यामि प्रव्रज्याञ्च ग्रहीष्यामि ।'

कुमारः रत्नखचितां शिविकामारुह्य रैवतकं पर्वतमागच्छत, तत्र च श्रीकृष्णबलभद्रादीनां पुरतः पञ्चमुष्टीलोचं कृत्वा प्रव्रज्यामगृह्णात् ।

श्रीकृष्णः सर्वैः परिजनैः सह— 'संयमिन् ! संयममार्गे दृढो भव ! ज्ञानदर्शनचारित्रेषु साफल्यं लभस्व ! मोक्षमधिगच्छ' इत्थं भूतां मङ्गल-कामनां कृत्वा द्वारिकामगच्छत् ।

देवी राजीमती यदा कुमारस्य प्रव्रज्या-ग्रहण-समाचारमशृणोत तदा सा भृशं दुःखिताऽभवत् स्वचित्तेऽचिन्तयच्च 'राजकुमारः मां राज्य-वैभवं च परित्यज्य तपसि लीनः, धिक् मा यदहं भोगेषु अनुरक्तास्मि ।' ततः सापि केशलुंचनं कृत्वा साध्वी अभवत् । तया सह अनेकाः सख्यः दास्यश्च साध्व्योऽभवन् । राजीमती दृढव्रता संयमपरायणा च भूत्वा ज्ञानदर्शनचारित्रप्राप्त्यै यत्नशीलाभवत् ।

एकदा सा मार्गमगच्छत तदा भृशं वर्षाभवत्, तया वर्षया तस्याः वस्त्राण्याप्लावितान्यभवन् । आप्लावितवस्त्रा राजीमती एकस्यां पर्वत-गुहायां प्राविशत् । तत्रासीत्तपसिलीनः समुद्रविजयस्य भूपतेः पुत्रो रथ-नेमिः किन्त्वन्धकारवशात्सा तं नापश्यत्, अतः तया जलेन आप्ला-वितानि वस्त्राणि तथा प्रसारितानि यथा शुष्कानि भवेयः तेन च सा एकान्तं मत्वा निर्वस्त्राऽभवत ।

निर्वस्त्रां तां युवतीं साध्वीं दृष्ट्वा रथनेमेश्चित्ते सुप्ता वासना जागृता । राजीमती च सहसा तं संपश्य शरीरं हस्ताभ्यां संगोप्य वेप-माना तत्रैवातिष्ठत् ।

वेपमानां राजीमतीं विलोक्यावदत् रथनेमिः— 'कस्मात् भीता भवसि सुन्दरि ! अहमस्मि भवत्याः सौन्दर्यस्य रक्षकः । देवांगनादुर्लभं तव यौवनम्, अनुपमेयञ्च तव रूपम् । अहमस्मि युवा, आकांक्षामि यौवन-सुखम् । त्वमपि युवती, अतः यौवनसुखमाकांक्ष । कथं यौवनं दहसि तपस्याग्निना ? संयम-पालनं तु वार्धक्ये पालयिष्यामः ?

वस्त्रै शरीरमावृत्य राजीमती, तपोभ्रष्टं तं रथनेमिमवदत्—'पथभ्रष्ट ! धिक् त्वां, यतो हि वान्तमिव परित्यक्तान्भोगान् पुनः अभिलषसि, अस्मात् घृणितजीवनात् वरं ते मरणम्। न जातु कामः कामानामुपभोगेन शाम्यति, यथेन्धनम् लब्ध्वा अग्निः संवर्धते तथैव कामः संवर्धते भोगान् संलभ्य। क्रोधादिकान् सर्वान् कषायान् जित्वा स्वीकृतं संयमं सरक्ष।

राजीमत्याः उपदेशेन प्रबुद्धमानसः रथनेमिः क्षमायाचनां कृत्वा तस्या चरणयोः न्यपतत्। राजीमती तं संक्षस्य निर्जनं गत्वा कष्टसाध्य तपः तप्त्वा कैवल्यमध्यगच्छत्। रथनेमिः अपि अन्धकारं भित्वोदित सूर्य इव तपोऽतपत, तेन च केवली अभवत्।

धन्या देवी राजीमती पुण्यचरिता

अभ्यास—

(क) (१) राजीमती रथनेमिं किमवदत्।

(२) किमुक्तं रथनेमिना राजीमतीं दृष्ट्वा।

(ख) सन्धिच्छेद कीजिए।

कृष्णस्यानुमत्या, खादत्यत्र, महर्द्धिकः, वस्त्राण्याप्लावितान्यभवन्।

(ग) राजीमती का कथानक हिन्दी मे लिखिए।



# चत्वारिंशः पाठः

## कृत्–प्रत्यय ( क्त और क्तवतु )

क्रिया भेद—क्रिया के मुख्यतः दो रूप है—सकर्मक और अकर्मक।

सकर्मक—उन क्रियाओ को सकर्मक क्रिया कहा जाता है जिनका प्रयोग कर्म सहित होता है। जे--राम पुस्तक पढता है (रामः पुस्तकं पठति) इस वाक्य मे पठ् धातु सकर्मक है, क्योकि उसके साथ पुस्तक रूप कर्म का प्रयोग होता है।

यदि यह कहा जाय कि 'रामः पठति' तब स्वभावतः यह प्रश्न उत्पन्न होता है कि क्या पढता है ? इस प्रश्न के उत्तर

के रूप में जो कुछ कहा जायगा वही कर्म होगा। यथा-
'**राम पठति किं पठति**' पुस्तक। यहाँ **किं पठति** का उत्तर
है **पुस्तकम्** अतः **पुस्तकम्** कर्म है। इसलिए **पठ धातु** से बने
वाक्य में कर्म-वाचक शब्द न होने पर भी **पठ धातु सकर्मक**
ही होगी।

**अकर्मक**- कुछ ऐसी क्रियाएं है जिनका फल कर्ता को ही प्राप्त होता है, अतः उनमें कर्म नही होता. ऐसी कर्म-रहित धातुओं को अकर्मक कहा जाता है। जैसे- '**रामः भवति**' इस वाक्य मे भू धातु के साथ कर्म नही और न ही कर्म को जानने की उत्कण्ठा ही जागृत होती है, अतः यह **अकर्मक** धातु है। प्रायः जिन धातुओ के निम्नलिखित अर्थ होते है वे **अकर्मक** ही होती है-**लज्जा** (शर्माना) **सत्ता** (होना), **स्थिति** (ठहरना) **जागरण** (जागना), **वृद्धि** (बढना), **क्षय** (नष्ट होना), **भय** (डरना) **जीवित** (जीना), **मरण** (मरना) **शयन** (सोना) **क्रीडा** (खेलना), **दीप्ति** (चमकना), **रुचि** (अच्छा लगना)।

# कृत् प्रयय क्त और क्तवतु

जब हमे किसी कार्य की समाप्ति का बोध कराना होता है तब हम धातु के अन्त मे त (क्त) अथवा तवत् (क्तवतु) प्रत्यय लगा देते है।

यथा-**पठ्+ त= पठितः, गम्+त= गतः, भू+त = भूतः, पठ+तवत्= पठितवान्, गम्+तवत्= गतवान्. भू +तवत् = भूतवान्।**

**विशेष**- कर्ता की विभक्ति का परिवर्तन-

(१) सकर्मक धातु के साथ जब क्त प्रत्यय लगाया जाता है, तब उसे कर्मवाच्य कहा जाता है। जिसका अभिप्राय यह है कि क्त प्रत्यय वाला क्रिया रूप कर्म का विशेषण बनेगा और उसी के अनुसार उसका लिंग और सातों विभक्तियों के वचन होंगे।

(२) कर्मवाच्य क्रिया का कर्त्ता का रूप प्रथमा विभक्ति वाला न होकर तृतीय विभक्ति वाला हो जाता है। जैसे–

(१) रामेण पुस्तकं पठितम् (राम ने पुस्तक पढी।)

रामेण गीता पठिता (राम ने गीता पढी।)

रामेण ग्रन्थौ पठितौ (राम ने ग्रन्थ पढे)

रामेण शास्त्राणि पठितानि (राम ने शास्त्र पढे)

रामेण कृतेषु कार्येषु अस्ति आस्माकं रुचिः

(राम के द्वारा किए गये कार्यो में हमारी रुचि है)।

यदि क्रिया अकर्मक होती है तो अकर्मक धातु के साथ क्त प्रत्यय लगने पर उसे भाववाच्य कहा जाता है, जिसका अभिप्राय होता है कि क्त प्रत्यय वाले शब्द के लिग, विभक्ति और वचन कर्ता के अनुसार होगे क्योकि वह कर्ता का विशेषण बन जाता है। यथा–

(२) रामः सुप्तः (राम सो गया)

कृष्णः भूतः (कृष्ण हो गया)

छात्रः स्थितः (छात्र ठहरा)

स्थितेन छात्रेण उक्तम् (ठहरे हुए छात्र ने कहा)

पाठशालायां स्थितेषु छात्रेषु रामोऽपि अस्ति।

(ठहरे हुए छात्रों में राम भी है)

विशेष--तवत् प्रत्यय और उसका प्रयोग–

तवत् प्रत्यय वाले शब्द कर्ता के ही विशेषण होते है, अतः उनके लिग वचन आदि कर्ता के अनुसार ही रखे जाते है।

यथाः– छात्रः पुस्तकं पठितवान्।

छात्रौ पुस्तकानि पठितवन्तौ।

छात्राः पुस्तकानि पठितवन्तः।

नीचे प्रसिद्ध धातुओ के क्त प्रत्ययान्त रूप दिये जा रहे हैं, इनका छात्रों को अभ्यास कर लेना चाहिएः–

| | | | | |
|---|---|---|---|---|
| घ्रा– | घ्रातः | (सकर्मक) | घ्रातम् | घ्राता |
| दृश्– | दृष्टः | (सकर्मक) | दृष्टम् | दृष्टा |
| पत्– | पतितः | (सकर्मक) | पतितम् | पतिता |
| हृञ्– | हृतः | (सकर्मक) | हृतम् | हृता |
| नम्– | नतः | (सकर्मक भाववाच्य) | नतम् | नता |
| रक्ष्– | रक्षितः | (सकर्मक) | रक्षितम् | रक्षिता |
| स्था– | स्थितः | (अकर्मक) | स्थितम् | स्थिता |
| स्मृ– | स्मृतः | (सकर्मक) | स्मृतम् | स्मृता |

रूप–रचना-पुल्लिग में राम शब्द के समान, नपुंसक लिंग में ज्ञान शब्द के समान और स्त्रीलिंग मे रमा शब्द के समान रूप–रचना कीजिए:–

१) सस्कृत से हिन्दी में अनुवाद कीजिए:–

(१) रावणेन सीता हृता ।

(२) रावणेन हृतायाः सीतायाः दर्शनार्थं हनुमान् लंकां गतः ।

(३) कपिना दग्धा लंका ।

(४) कपिना दग्धायां लंकायां हाहाकारो भूतः ।

(५) अस्माभिः सर्वाणि शास्त्राणि पठितानि ।

(६) मुनिभिः पूजितः आचार्यः इत्यवदत् ।

(७) आचार्येण पृष्टैः छात्रैः कथितम् ।

(८) तापसः सर्वं परित्यज्य गहनं वनं गतः ।

(९) रामेण लंकायाः राज्यं बिभीषणाय दत्तम् ।

(१०) सर्वैः श्रावकैः मुनिः प्रशंसितः ।

(११) नष्टो मोहः स्मृतिः लब्धा, तव प्रसादात् मया गुरो ।

(२) हिन्दी वाक्यों का संस्कृत में अनुवाद करो–

(१) श्रमण ने पूछा ।

(२) साध्वी ने जल पिया ।

(३) उसका मोह नष्ट हो गया।

(४) मैंने ज्ञान प्राप्त किया।

(५) क्या तूने उसे पकडा था।

(३) नीचे लिखे शब्दों का वाक्यों में प्रयोग कीजिए—

(क) उपदिष्टः, (ख) उत्थितः, (ग) समुत्थितः

(घ) संजातः, (ङ) भीतः (च) सुप्तः

(छ) जागृतः, (ज) आगता, (झ) समागता

---

(क) उपदेश किया, (ख) उठा, (ग) अच्छी तरह उठा

(घ) उत्पन्न हुआ, (ङ) डर गया, (च) सो गया

(छ) जाग गया, (ज) आ गई, (झ) आ गई



# एकचत्वारिंशः पाठः

## वासुदेवः श्रीकृष्ण

श्रीकृष्णस्य जन्म मथुरायामभवत् द्वापरे युगे। श्रीकृष्णस्य पिता वसुदेवः माता च देवकी आसीत्। वसुदेवस्य गृहे जन्मधारणात् श्रीकृष्णः वासुदेवः इति नाम्ना प्रसिद्धोऽस्ति। देवकी मथुराधिपस्य कंसस्य भगिनी आसीत्।

कंसेन महर्षेः नारदात् श्रुतं यत् देवक्याः अष्टमः पुत्रः एव तस्य घातकः भविष्यति, अतः तेन देवक्या सह वसुदेवः कारागारे निक्षिप्तः। तत्रैव श्रीकृष्णस्योत्पत्तिः अभवत्।

श्रीकृष्णस्य जन्मनि भूते देवमायया सर्वे कारागार-रक्षकाः प्रसुप्ताः। वसुदेवः यमुनामुल्लंघ्य बालं श्रीकृष्णं गृहीत्वा गोकुलं गतः। तस्मिन्नेव दिने वसुदेवस्य मित्रस्य नन्दस्य गृहे एका कन्या जाता। वसुदेवेन सा कन्या गृहीता पुत्रस्य तत्र स्थापितः। कन्यां गृहीत्वा सः पुनः कारागारमागतः सा च कन्या कंसेन हता।

श्रीकृष्णेन कंस-प्रेषिताः राक्षसाः लीलयैव हताः, तेन कंसस्य मानसं भृशं आकुलञ्चाभवत् ।

श्रीकृष्णस्य प्रियतरं खाद्यमासीत् गोरसम्-दुग्ध, दधि, तक्रं नवनीतञ्च । यदि कापि गोकुलवासिनी नवनीत, दधि, दुग्धञ्च मथुरायां विक्रयार्थं नयति तर्हि श्रीकृष्णः मित्रैः सह तस्याः भाण्डानि भिनत्ति, येन हि राक्षसाः नवनीतं भुक्त्वा दुग्धञ्च पीत्वा परिपुष्टा न भवेयुः ।

श्रीकृष्णस्य वेणुवादनं सर्वेषां प्रियमासीत् । वेणुनादेन मुग्धाभिः गोपबालाभिः गृहाणि अपि त्यक्तानि, कार्याणि च विस्मृतानि । पशवः खगाश्च वेणुनादेन मुग्धाः संभूताः ।

श्रीकृष्णेन दुष्टो भूपतिः कंसो हतः, जननीजनकौ च कारागारात् बहिः आनीतौ । मातृमहायोग्रसेनाय राज्यं प्रदाय श्रीकृष्ण द्वारिकामगच्छत् ।

श्रीकृष्णस्यैव काले पाण्डवानां कौरवैः सह युद्धोऽभवत् । तस्मिन् युद्धे श्रीकृष्णः स्वमित्रस्य अर्जुनस्य रथचालकः आसीत् ।

अर्जुनः युद्धे स्वजनान् दृष्ट्वा मोहमुपागतः । सः सशरं चापं भूमौ निक्षिप्य रथे तूष्णीं स्थितः । मोहपाशेन बद्धं अर्जुनं संपश्य श्रीकृष्णेनेदमुक्तम्—

पार्थ ! मोहं त्यज ! अधिकारप्राप्तिः मनुष्यस्य धर्मः । अधिकारप्राप्त्यै यत्नशीलो भव । आत्मा अजरः अमरः, न हन्यते हन्यमाने शरीरे कर्मबन्धेन मनुष्याः स्वर्गं नरकञ्च यान्ति । कर्मबन्धन मुक्ताः मानवाः मोक्षं गच्छन्ति । श्रीकृष्णस्योपदेशः गीतायां संग्रहीतः अस्ति ।

श्रीकृष्णस्योपदेशेन अर्जुनः युद्धे प्रवृत्तः, परन्तु तेन युद्धेन पाण्डवानां मनः व्याकुलोऽभूत् अतः युद्धे कृतायाः हिंसायाः प्रायश्चित्तार्थं हिमालयं गताः, तत्र च तपस्यया आत्मशुद्धेः प्रयासं अकुर्वन् ।

श्रीकृष्णोऽपि द्वारिकां गतः, तत्र च यादव-विनाशं दृष्ट्वा परलोकं गतः

( वैष्णवसम्प्रदायानुसारिणीयं गाथा )

अभ्यास–

१ (क) कः आसीत् कंसः ?

(ख) श्रीकृष्णः कस्मात् गोपिकानां गोरस-भाण्डानि अभिन्दत् ।

२ श्रीकृष्णेन गीतायां किमुक्तम् ।

३ श्रीकृष्ण का संक्षिप्त जीवन हिन्दी मे लिखिए ।

४ सन्धिच्छेद कीजिए–

तत्रैव, श्रीकृष्णस्योत्पत्तिः, श्रीकृष्णेनेदमुक्तम् श्रीकृष्णस्योपदेशेन श्रीकृष्णोऽपि ।



# द्विचत्वारिंशः पाठः

## वाग्व्यवहारः (मुहावरे)

१ इन्द्रोऽपिलघुतां याति स्वयं प्रख्यापितैः गुणैः–इन्द्र भी अपने गुण
(अपने मुंह मिया मिट्ठू) कहने से छोटा हो जाता है ।

२ कष्टः खलु पराश्रयः–पराधीनता कष्ट दायक है
(पराधीन सपनेहु सुख नाही)

३ बह्वारम्भे लघुक्रिया–बडा आरम्भ और छोटा फल ।
(खोदा पहाड निकली चूहिया)

४ जलबिन्दुनिपातेन क्रमशः पूर्यते घटः– बूंद बूंद गिरने से घडा
(बूंद बूंद से घट भरे) भरता है ।

५ वीरभोग्या वसुन्धरा–पृथ्वी वीरो के द्वारा ही भोगी जाती है ।
(जिसकी लाठी उसकी भैंस)

६ दूरस्थाः पर्वताः रम्याः– दूर से पर्वत सुन्दर लगते हैं ।
(दूर के ढोल सुहावने)

७ न मुनिः पुनरायातो न चासौ वर्धते गिरिः–न मुनि फिर आये न
(न नौ मन तेल होगा न राधा नाचेगी) पर्वत बढा ।

८ गतस्य शोचनं नास्ति–बीते हुए की चिन्ता नही ।
(बीती ताहि बिसारदे, आगे की सुध लेय)

९ एका क्रिया द्व्यर्थकरी प्रसिद्धा– एक काम दो फल देने वाला प्रसिद्ध है ।
(एक पथ दो काज)

१० परोपदेशे पाण्डित्यं–दूसरों को उपदेश देने मे ही विद्वत्ता है ।
(पर उपदेश कुशल बहुतेरे)

११ विषकुम्भं पयो मुखम्–जहर का घडा, ऊपर दूध ।
(मुह मे राम बगल मे छुरी)

१२ चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च–दुख और सुख चक्र के समान आते जाते रहते हैं ।
(चार दिनों की चाँदनी फिर अंधेरी रत)

१३ सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः–सब कुछ जाता देखकर विद्वान् कुछ का त्याग कर देता है ।
(भागते चोर की लंगोटी ही भली)

१४ सहवासी विजानाति चरित्रं सहवासिनः–साथी का हाल साथी ही जानता है ।
(घायल की गति घायल जाने और न जाने कोय)

१५ न विडालो भवेद् यत्र तत्र नृत्यन्ति मूषकाः–जहां बिल्ली नहीं वहीं चूहे नाचते हैं ।
(घर वाला घर नही, हमे किसी का डर नही)

१६ शुभस्य शीघ्रम्–शुभ कार्य शीघ्र ही करना चाहिये ।
(तुरंत दान महा कल्याण)



# त्रयश्चत्वारिंशः पाठः

## सिद्धार्थः बुद्धः

आसीत् पुरा कपिलवस्तुनाम्नः नगरस्य राजा शुद्धोदनः । तस्य च धर्मशीला भार्या महामाया आसीत् । सा चैकदा रथमारुह्य लुम्बनीवनं गता । तत्रैव रथे तस्याः पुत्रः जातः, यः प्राक् 'सिद्धार्थः' इति नाम्ना प्रसिद्धः । सिद्धार्थस्य जनन्याः महा–

मातायाः सिद्धार्थस्य जन्मनः सप्तमे दिने निधनं भूतम् । बालकस्य पोषणं तस्य मातृष्वस्रा (मौसी तुलीया) गौतम्या कृतं ।

सिद्धार्थः प्रकृत्यैव दयाशीलः सत्यभाषी संसारात् उदासीनश्च आसीत् । यदा कुमारः अष्टादशवर्षीयो जातः तदा तस्य यशोधराख्यया कन्यया सह विवाहः सम्पन्नः । लोकाचारेण बद्धः सिद्धार्थः गृहे आसीत्, किन्तु तस्य चित्तेन तत्र सुखं नानुभूतम् ।

एकदा सिद्धार्थेन एको वृद्धः दृष्टः, यः दण्ड गृहीत्वा नमितकटिः चलतिस्म । मुण्डं पलितं, तुण्डं दशनविहीनं चासीत् । सिद्धार्थोऽचिन्तयत् 'एषापि मनुष्यस्य गतिः ।'

एकदा सः एकं वेदनाविह्वलं रुग्णमपश्यत्, तं दृष्ट्वा कुमारोऽवदत् 'रोगैरावृतमपिजीवनम् ।'

एकदा च कुमारः एकं शवं अपश्यत्—तदा तस्य मुखात् श्रुतं जनैः-'मरणाक्रान्तञ्च जीवितम् ।'

आभिः घटनाभिः कुमारस्य मनसि वैराग्यस्योदयोऽभवत् । एकदा निशीथे पत्नीं पुत्रं च परित्यज्य रथमारुह्य स वनं प्रस्थितः—मार्गे च रथवाहकं छन्दकं रथं च परावृत्य सः गहनं वनं प्राप्तः । तत्र च तेन दुष्करा तपस्या कृता । तया तपस्यया तेन बुद्धत्वं-(पूर्ण बोधि) उपलब्धम् । तेनैव सः बुद्धः इति प्रसिद्धः ।

बुद्धः सारनाथमागत्य पंचवर्गीयेभ्यः भिक्षुभ्यः उपदेशमयच्छत् । सः भिक्षार्थं स्वगृहमपि गतः—तत्र च यशोधरा अपि पतिमनुकृत्य भिक्षुणी अभवत्, बुद्धस्य पुत्रेण राहुलेनापि प्रव्रज्या गृहीता ।

सारिपुत्रः मौद्गलायनश्च बुद्धस्य प्रमुखौ शिष्यौ आस्ताम् । बुद्धस्य धर्ममार्गः मध्यममार्गः । बुध्द इत्युपादिशत् सम्यक्समयाचारः, सम्यक्विचारः, सम्यक् भाषणं, सम्यक् चरित्रम्,

सम्यक् जीवनम्, सम्यक् प्रयत्नं, सम्यक् चिन्तनम्, सम्यक् ध्यानञ्च-एतानि अष्टौ साधनानि मोक्षसाधकानि सन्ति ।

बौध्दधर्मस्य प्रचारः चीने, जापाने, ब्रह्मदेशे, श्यामे वालिद्वीपे, सिंहलद्वीपे, मंगोलियादेशे, थाइलैण्ड प्रदेशे च अद्यापि अस्ति । तेषां कृते भारतः धर्मगुरुः । नमन्ति ते बुध्दजन्म-प्रदातारं भारतम् ।

अभ्यास-

(१) कुमारस्य हृदये कथं वैराग्यस्योदयः जातः ?

(२) बुद्धः किमुपदिशत् ?

(३) कस्मात् कारणात् बुद्धः बुद्ध इति नाम्ना प्रसिद्धः ?

(४) बुद्धस्य मते कानि मोक्षसाधनानि सन्ति ?



## चतुश्चत्वारिंशः पाठः

### ऋकारान्त पितृ शब्द (पुल्लिंग) पिता

| | | | |
|---|---|---|---|
| कर्ता- | पिता | पितरौ | पितरः |
| कर्म- | पितरम् | ,, | पितॄन् |
| करण- | पित्रा | पितृभ्याम् | पितृभिः |
| सम्प्रदान- | पित्रे | ,, | पितृभ्यः |
| अपादान- | पितुः | ,, | ,, |
| सम्बन्ध- | ,, | पित्रोः | पितॄणाम् |
| अधिकरण- | पितरि | ,, | पितृषु |
| सम्बोधन- | हे पितः | हे पितरौ | हे पितरः |

इसी प्रकार-भ्रातृ (भाई) जामातृ (जवाई) देवृ (देवर) शब्दों की रूप रचना कीजिए ।

विशेष-सम्बन्धवाचक ऋकारान्त शब्दों में शब्द की अन्तिम ऋ को प्रथमा द्विवचन से लेकर द्वितीया द्विवचन तक अर् आदेश हो जाता है। शेष में आर् होता है।

## ऋकारान्त कर्तृ शब्द (पुंल्लिग)

( काम करने वाला या निर्माता )

| | | | |
|---|---|---|---|
| कर्ता— | कर्ता | कर्तारौ | कर्तारः |
| कर्म— | कर्तारम् | ,, | कर्तॄन् |
| करण | कर्त्रा | कर्तृभ्याम् | कर्तृभिः |
| सम्प्रदान— | कर्त्रे | ,, | कर्तृभ्यः |
| अपादान— | कर्तुः | ,, | ,, |
| सम्बन्ध— | ,, | कर्त्रोः | कर्तॄणाम् |
| अधिकरण— | कर्तरि | ,, | कर्तृषु |
| सम्वोधन— | हे कर्तः | हे कर्तारौ | हे कर्तारः |

इसी प्रकार—दातृ (देनेवाला) श्रोतृ (सुननेवाला) गन्तृ (जानेवाला) नेतृ (ले जानेवाला) सवितृ (सूर्य) द्रष्टृ (देखनेवाला) वक्तृ (बोलनेवाला) धातृ (ब्रह्मा) उपदेष्टृ (उपदेशक) इन शब्दों की भी कर्तृ शब्द के समान रूप रचना कीजिए।

## ऋकारान्त मातृ शब्द (स्त्रीलिंग)—माता

| | | | |
|---|---|---|---|
| कर्ता | माता | मातरौ | मातरः |
| कर्म - | मातरम् | ,, | मातॄः |
| करण— | मात्रा | मातृभ्याम् | मातृभिः |
| सम्प्रदान— | मात्रे | ,, | मातृभ्यः |
| अपादान— | मातुः | ,, | ,, |
| सम्बन्ध— | ,, | मात्रोः | मातॄणाम् |
| अधिकरण— | मातरि | ,, | मातृषु |
| सम्बोधन— | हे मातः | हे मातरौ | हे मातरः |

## लभ् (प्राप्त करना) भ्वादि आत्मनेपदी

विशेष—धातुओं के दो रूप है—परस्मैपदी, आत्मनेपदी। प्राचीन काल मे इनके प्रयोग मे कुछ भेद माना गया था, परन्तु अब केवल रूपरचना में भेद है प्रयोग में नहीं। आत्मनेपदी धातुओं के साथ सभी लकारो में प्रत्यय लभ् धातु के समान ही लगाए जाते है।

### लट्

| | | |
|---|---|---|
| लभते | लभेते | लभन्ते |
| लभसे | लभेथे | लभध्वे |
| लभे | लभावहे | लभामहे |

### लङ्

| | | |
|---|---|---|
| अलभत | अलभेताम् | अलभन्त |
| अलभथाः | अलभेथाम् | अलभध्वम् |
| अलभे | अलभावहि | अलभामहि |

### लृट्

| | | |
|---|---|---|
| लप्स्यते | लप्स्येते | लप्स्यन्ते |
| लप्स्यसे | लप्स्येथे | लप्स्यध्वे |
| लप्स्ये | लप्स्यावहे | लप्स्यामहे |

### लोट्

| | | |
|---|---|---|
| लभताम् | लभेताम् | लभन्ताम् |
| लभस्व | लभेथाम् | लभध्वम् |
| लभै | लभावहै | लभामहै |

### विधिलिङ्

| | | |
|---|---|---|
| लभेत | लभेयाताम् | लभेरन् |
| लभेथाः | लभेयाथाम् | लभेध्वम् |
| लभेय | लभेवहि | लभेमहि |

अभ्यास—

(१) नीचे लिखे वाक्यों का संस्कृत में अनुवाद कीजिए—

(क) राम पिता की आज्ञा से वन में गए थे।

(ख) महावीर अपनी इच्छा से वन मे गए थे।

(ग) बुद्ध भी अपनी इच्छा से तप करने गए थे।

(घ) मै पिताजी को नमस्कार करता हूँ।

(ङ) वह माता जी को नमस्कार करता है।

(२) नीचे लिखे संवाद का हिन्दी में अनुवाद कीजिए—

## पर्युपासना—फलम्

गौतम— भगवन् ! श्रमणस्य माहनस्य सेवायाः किं फलम् लभते जनः ?

महावीर— गौतम ! श्रमणस्य माहनस्य सेवया धर्मश्रवणं लभते जनः ।

गौतम— भगवन् ! धर्म श्रवणेन किं फलं जनः लभते ?

महावीर— गौतम ! धर्म—श्रवणेन ज्ञानं लभते ।

गौतम—भगवन् ! किं लभते जनः ज्ञानेन ?

महावीर— गौतम ! ज्ञानेन लभते जनः विज्ञानम् ।

गौतम—भगवन् ! विज्ञानेन किं लभते साधकः ?

महावीर— गौतम ! विज्ञानेन प्रत्याख्यानं (त्यागवृत्ति) जनः लभते ।

गौतम— भगवन् ! प्रत्याख्यानेन किं फलं लभते ?

महावीर— गौतम ! प्रत्याख्यानेन संयमात्मक फलं लभते साधकः ।

गौतम— भगवन् ! संयमेन किं फलं लभते जनः ?

महावीर— गौतम ! संयमेनावरुद्धो भवति कर्मप्रवाहस्तेन जीवः अनास्रवी भवति ।

गौतम— भगवन् ! अनास्रवत्वेन किं फलं लभते जन. ?

महावीर— गौतम ! अनास्रवत्वेन तपः लभते साधकः ।

गौतम— भगवन् ! तपसा कि फलं लभते साधकः ?

महावीर—गौतम ! तपसा कर्मक्षयः भवति साधकस्य ।

गौतम— भगवन् ! कर्मक्षयेन किं फलं लभते जनः ?

महावीर— गौतम ! कर्मक्षयेन जीवः अक्रियो भवति ।

गौतम— भगवन् ! अक्रियत्वेन किं लभते साधकः ।

महावीर— गौतम ! अक्रियत्वेन सिद्धि लभते जनः ।

श्रमणस्य माहनस्य पर्युपासनायाः चरमं फलं सिद्धिः एव अस्ति गौतम् !

गौतम— धन्योऽस्मि देव ! भवता प्रदत्तेनज्ञानेन ! (भगवती—सूत्र)

अभ्यास—

(१) श्रमण की सेवा का सबसे बडा लाभ क्या है ?

(२) निम्नलिखित शब्दों की विभक्तियाँ और वचन बताइए—

प्रत्याख्यानम्, अलास्रवत्वेन, कर्मक्षयः पर्युपासनायाः ।



卐

# पंचचत्वारिंशः पाठः

## उकारान्त साधु शब्द ( पुल्लिंग )

| | | | |
|---|---|---|---|
| कर्ता— | साधुः | साधू | साधवः |
| कर्म - | साधुम् | ,, | साधून् |
| करण— | साधुना | साधुभ्याम् | साधुभिः |
| सम्प्रदान— | साधवे | ,, | साधुभ्यः |
| अपादान— | साधोः | ,, | ,, |
| सम्वन्ध— | ,, | साध्वोः | साधूनाम् |
| अधिकरण— | साधौ | ,, | साधुषु |
| सम्बोधन— | हे साधो | हे साधू | हे साधवः |

इसी प्रकार— गुरु, रिपु, शत्रु, विष्णु, शम्भु, वायु, मृत्यु, प्रभु, विधु (चन्द्र), उरु (जांघ), कृशानु (अग्नि) आदि शब्दों की रूप-रचना कीजिए ।

विशेष—जिन शब्दों में र् ष हों उन शब्दों के तृतीया के एकवचन में 'न' को 'ण' हो जाता है । इसी प्रकार षष्ठी के बहुवचन में 'नाम्' को 'णाम्' हो जाता है । जैसे—गुरुणा, गुरुणाम् ।

सन्धि-ज्ञान—यदि प्रथम शब्द के अन्त मे 'तवर्ग' हो और सामने आने वाले शब्द के आरम्भ में 'ल' हो तो 'त वर्ग' को भी 'ल्' हो जाता है और वह 'ल्' सामने के 'ल्' के साथ मिल जाता है ।

यथा– तत्+लीनः– तल् लीनः = तल्लीनः (उस में लीन)

उद्+लेखः– उल् लेखः = उल्लेखः (लिखा जाना)

उद्+लंघनम्– उल् लंघनम् = उल्लंघनम् (लांघना)

सत्+लक्षणम्– सल् लक्षणम् = सल्लक्षणम् (अच्छे लक्षण)

**व्याकरण–ज्ञान**- जिस क्रिया के लिये कोई अन्य क्रिया की जाती है, उस क्रिया के साथ तुम् (तुमुन्) लगाकर उसका, के लिय अर्थ प्रकट किया जाता है। यथा–**गन्तुम्** (जाने के लिये) **द्रष्टुम्** (देखने के लिये)।

**विशेष**-(१) जिस क्रिया के लिये कोई क्रिया की जाती है–उन दोनो क्रियाओ का कर्ता एक ही होना चाहिए।

(२) 'तुम्' जिसके अन्त मे हो वह अव्यय हो जाता है–अतः उसका रूप सदा एक सा रहता है।

| | | | |
|---|---|---|---|
| **अर्चितुम्**– | पूजा करने के लिये | **जेतुम्**– | जीतने के लिये |
| **अध्येतुम्**– | पढने के लिये | **हर्तुम्**– | हरण के लिये |
| **कर्तुम्**– | करने के लिये | **यष्टुम्**– | यज्ञ करने के लिये |
| **क्रेतुम्**– | खरीदने के लिये | **ज्ञातुम्**– | जानने के लिये |
| **त्यक्तुम्**– | छोडने के लिये | **आरोढुम्**– | चढने के लिये |
| **द्रष्टुम्**– | देखने के लिये | **लब्धुम्**– | प्राप्त करने के लिये |
| **प्रणन्तुम्**– | नमस्कार करने के लिये | **नेतुम्**– | ले जाने के लिये |
| **धावितुम्**– | दौडने के लिये | **गन्तुम्**– | जाने के लिये |
| **पक्तुम्**– | पकाने के लिये | **मोक्तुम्** | छोडने के लिये |
| **प्रष्टुम्**– | पूछने के लिये | **श्रोतुम्**– | सुनने के लिये |
| **वक्तुम्**– | बोलने के लिये | **सेवितुम्**– | सेवा करने के लिये |
| **स्तोतुम्**– | स्तुति करने के लिये | **पातुम्**– | पीने के लिये |
| **स्थातुम्**– | ठहरने के लिये | **हन्तुम्**– | मारने के लिये |
| **स्नातुम्**– | स्नान करने के लिये | **स्मर्तुम्**– | स्मरण करने के लिये |

| | | | |
|---|---|---|---|
| दातुम्– | देने के लिये | शोचितुम्– | सोचने के लिये |
| स्प्रष्टुम्– | छूने के लिये | सोढुम्– | सहन करने के लिये |
| ग्रहीतुम्– | लेने के लिये | चिन्तयितुम्– | सोचने के लिये |
| भक्षयितुम्– | खाने के लिये | ज्ञापयितुम्– | सुचित करने के लिये |

अभ्यास–

नीचे लिखे संवाद का हिन्दी मे अनुवाद कीजिए:–

रमेश–सुरेश ! त्वं कुत्र गन्तुमुद्यत: असि ?

सुरेश–मित्र ! अहं स्थानकं गच्छामि।

रमेश–किं कर्तुंतत्र गच्छसि ।

सुरेश–तत्रास्ति वार्षिकोत्सव, तं द्रष्टुम् गच्छामि।

रमेश–किं भविष्यति तत्रोत्सवे ?

सुरेश–साधूनामुपदेशा, तान् श्रोतुमेव गच्छामि।

रमेश–किं भविष्यत्युपदेश–श्रवणेन ?

सुरेश–उपदेश–श्रवणेन चित्तं शान्तिं लभते, यदा साधवः उपदिशन्ति तदा तत्र सर्वे दत्त–चित्ताः भवन्ति।

रमेश–अहमपि गन्तुमिच्छामि त्वया सह ?

सुरेश–आगच्छ मित्र ! आवां द्वौ एव तत्र गच्छावः।

卐 ✕ 卐

## षट्चत्वारिंशः पाठः

### देवी रोहिणी

आसीद् वैशाली नगरे 'धन्नाजी' इति नाम्ना प्रसिद्धः श्रेष्ठी, तस्य चासन् चत्वारः पुत्रः– धनपालः, धनदेवः धनगोपः, धनरक्षितश्च।

एषां श्रेष्ठिपुत्राणामासन् चतस्रः भार्याः, ताभिश्च भृशं सन्तुष्ट–श्चासीच्छ्रेष्ठी, किन्तु कस्यै वध्वै गृहरक्षा-दायित्वं प्रदाय निश्चिन्तो भवामीति चिन्तया नितरां व्याकुलमासीत्तस्य चित्तम्।

आसीच्छ्रेष्ठी कुशलबुद्धिः, अतस्तेन परीक्षार्थं चतसृभ्यो वधूभ्यः पञ्च पञ्च तण्डुलानि प्रदायेति कथितम्– 'अलभ्यान्येतानि खलु तण्डुलानि भवतीभिः स्वान्तिके निधाय रक्षितव्यानि यदाहं याचयिष्यामि तदा मह्यं प्रयच्छत यूयम् । तण्डुलानि वधूभ्यः दत्त्वा गतः श्रेष्ठी ।

गते श्रेष्ठिनि ज्येष्ठा वधूः अचिन्तयत्– 'भ्रष्टा खलु बुद्धिः वार्धक्येन श्वशुरस्य, किमलभ्यतैषां तण्डुलानां, तण्डुलानि तण्डुलान्येव सन्ति, न सन्ति स्वर्णमुद्राः । संचिन्त्येति प्रक्षिप्तानि तानि तण्डुलानि तया वीथ्याम् ।

द्वितीयया वध्वेति संचिन्त्य भक्षितानि तण्डुलानि–एतानि तण्डुलान्यलभ्यः प्रसादः श्वसुरस्य, सफलमनोरथा भविष्याम्यनेन प्रसाद-भक्षणेन

तीतृयया वध्वा स्वर्णमञ्जूषायां निधाय सुरक्षितानि तानि तण्डुलानि ।

कनिष्ठया चतुर्थया वध्वा तानि तण्डुलानि पितृगृहे प्रेषितानि, अयं सन्देशश्च प्रेषितः–'इमानि तण्डुलानि सुक्षेत्रे वपेयुः । तस्याः पितापि तानि तण्डुलानि सुक्षेत्रेऽवपत्, तेन च तानि अर्धशतसंख्यकान्यभवन् ।

तस्यः जनकः सार्धशतसंख्यकानि तानि तण्डुलानि पुनः अवपत् तेन च तानि सपादशतसेरप्रमाणानि अभवन् । पुनः वपनेन चतुर्थे खलु वर्षे तानि तण्डुलानि पंचशताधिकद्वादशसहस्रसेरप्रमाणानि अभवन् । इत्थमेव पञ्चमे वर्षे तेषां मानं सार्धशतद्वयोत्तरुकत्रिशत्सहस्र मनप्रमाणं जातं ।

व्यतीतेषु पञ्चसु वर्षेषु यदा श्रेष्ठी सर्वान् पुत्रानाहूय तेषां पुरतः वधूभ्यस्तण्डुलान्ययाचत्, तदा ज्येष्ठा वधू अवदत्–तुच्छानि तानि तण्डुलानि मया तु तदैव वीथ्यां क्षिप्तानि, सन्त्यन्नागारे बहूनि तादृशानि तण्डुलानि तेभ्यः पञ्च गृह्णातु भवान् ।"

तस्याः अनेनोत्तरेण रुष्टः श्रेष्ठी, अतः तेन सा गृहमार्जने, पात्र-शुद्धौ, अन्नप्रेषणे च नियुक्ता, उज्झिता च तस्याः नाम कृतम् ।

प्रसादं मत्वा या चाभक्षत्तानि तण्डुलानि सा च वधू तेन पाक-शालायां पाककर्मणि नियुक्ता 'भोगवती' इति च तस्याः नाम कृतम् ।

यया च वध्वा तानि कनकमञ्जूषायां स्थापितानि सा च तेन धनागारे नियुक्ता, रक्षिता च तस्याः नाम कृतम् ।

श्वसुरेण पृष्टया कनिष्ठया वध्वोक्तम्– पितः ! तानि तण्डुलानि मया तदैव पितृगृहे प्रेषितानि साम्प्रतञ्च तानि प्रभूतानि जातानि, अतः तेषामानयनाय प्रेष्यन्तु अनेकान् शकटान् मम पितृगृहे ।

श्रेष्ठि-प्रेषिताः शकटाः तण्डुलभारप्रपूरिताः यदा, वैशालीं प्रत्यागताः, तदा तान् दृष्ट्वा नितरां मुदितोऽभवत् श्रेष्ठी । कनिष्ठायाः वध्याः प्रज्ञया सन्तुष्टेन श्रेष्ठिना तस्याः नाम 'रोहिणी' इति कृतम् । तस्यै एव तेन गृहरक्षा दायित्वमपि प्रदत्तम् ।

सर्वे बान्धवास्तस्याः पत्या सह तामशंसन् । सैव नारी प्रशंसनीयाभिनन्दनीया च भवति या वंशधराणां समादरं करोति, तेषामाज्ञाञ्च पालयति, या च विचार्यैव कर्म करोति ।

अभ्यास–

(१) नीचे लिखे शब्दों का अर्थ सहित अभ्यास कीजिए:–

श्रेष्ठिन् (सेठ), दायित्वम् (भार, जिम्मेवारी), तण्डुलम् (चावल), स्वान्तिके (अपने पास), निधाय (रखकर), वार्धक्यम् (बुढापा), वीथी (गली), स्वर्ण मञ्जूषा (सोने की डिबीया) सार्धशतम् (एक सौ पचास–१५०), सपादशतसेरप्रमाणानि (सवा सौ सेर वजन के), पंच-शताधिकद्वादशसहस्र सेर प्रमाणानि (१२५०० सेर वजन वाले), सार्धशतद्वयोत्तरैकत्रिंशत् – सहस्रमनप्रमाणम् (३१२५० मन वजन वाले) गृहमार्जने (घर में झाडू लगाने के काम पर), पात्रशुद्धौ (बर्तन मांजने के काम पर), अन्नपेषणे (अनाज पीसने के काम पर) मत्वा (मानकर), प्रभूतम् (प्रभूतानि) (बहुत अधिक), शकटः (बैलगाडी), वंशधरः (कुल के बडे बूढे लोग) ।

(२) निम्नलिखित शब्दों में सन्धिच्छेद करते हुए उनका वाक्यों मे प्रयोग कीजिए:–

सन्तुष्टश्चासीच्छ्रेष्ठी (सन्तुष्टः+च+आसीत्+श्रेष्ठी ।)

अलभ्यान्येतानि अलभ्यानि+एतानि ।

सन्त्यन्नागारे (सन्ति+अन्न+आगारे ।

(३) देवी रोहिणी की कथा हिन्दी मे लिखिए ?

(४) रोहिणी पर श्रेष्ठी क्यों प्रसन्न हुआ ? उसके गुणों का परिचय दीजिए ?

卐 ※ 卐

# सप्तचत्वारिंशः पाठः

## नमस्कार–मन्त्रम्

शिष्यः–भगवन् ! नमस्कारमन्त्रं ज्ञातुमिच्छामि, उपदिशतु भवान् ?

गुरुः–वत्स ! श्रेष्ठा हि नूनं तव जिज्ञासा, वदामि नमस्कार–मन्त्रम्–दत्तचित्तो भूत्वा शृणु–

णमो अरिहन्ताणं (नमः अरिहन्तेभ्यः)

णमो सिद्धाणं (नमः सिद्धेभ्यः)

णमो आयरियाणं (नमः आचार्येभ्यः)

णमो उवज्झायाणं (नमः उपाध्यायेभ्यः)

णमो लोए सव्वसाहूणं (नमः लोके सर्वसाधुभ्यः)

शिष्यः–देव ! प्राकृतभाषायामस्ति एतत् नमस्कारमन्त्रम्, प्राकृत–भाषयै–वैषामुच्चारणं करणीयम् ?

गुरुः– ओम् वत्स ! स्वाभाविकी खल्वियं भाषा, यतो हि सृष्टया आरम्भे मनुष्यस्य हृदयात्स्वाभाविकेन रूपेण निस्सृतेयं भाषा। नमस्कार–क्रियापि स्वाभाविकी नतु कृत्रिमा, स्वाभाविकं पुण्यं कार्यं स्वाभाविकया पुण्यभाषयैव करणीयम्, अतः प्राकृतभाष–यैवैषां मन्त्राणामुच्चारणमुचितम्।

शिष्याः–के हि खलु अरिहन्ताः भगवन् ! कोऽर्थः अरिहन्तेति शब्दस्य।

गुरुः– रागद्वेषादयः एव मानवस्य यथार्थेन शत्रवः, तान् शत्रून् ये घातयन्ति ते एव अरिहन्ताः, तीर्थङ्कराः देवाः कैवल्यं गताश्चा–त्मानः अरिहन्ताः, तेभ्यः नमस्कुर्मो वयम्।

शिष्यः–के हि खलु सिद्धाः भगवन् ! कोऽर्थः सिद्धशब्दस्य ?

गुरुः– नष्टानि खलु यैः पुण्यशीलैः तपोनिरतैः लोके नरके स्वर्गे च जन्म–मृत्युप्रदानि कर्माणि, यैश्च खलु प्राप्तात्मसिद्धिः, एवं भूताः सिद्धशिलाञ्च प्राप्ताः मुक्तात्मानः एव सिद्धाः । तेषां नमस्कारेण सर्वेषु कार्येषु वयमपि सिद्धिं लभामहे ।

शिष्यः–मयि कृपां कृत्वा आचार्य शब्दस्यार्थमपि प्रकाशयन्तु भवन्तः ।

गुरुः– चतुर्विधस्य श्रीसंघस्य ये हि खलु पथप्रदर्शकाः, ज्ञान–दर्शनचारित्र–तपोवीर्यरूपमाचारं ये आचरन्ति श्रमणान् श्रावकांश्च आचारपालनार्थं प्रेरयन्ति, एवं भूताः संघ–नायकाः श्रमणश्रेष्ठाः आचार्याः । तान् नमस्कृत्य वयं तान् प्रति स्वकीयां श्रद्धां प्रकाशयामः ।

शिष्यः–उपाध्यायमपि ज्ञातुमिच्छामि, कृपां कृत्वा कथयन्तु भवन्तः ?

गुरुः– अधीतानि येन हि खलु आगमानि, संघस्थान् श्रमणान् श्रावकांश्च यः पाठयति शास्त्राणि सः उपाध्यायः । उप–कुर्वन्त्यस्मान् विद्यादानेन खलु उपाध्यायाः, अतः तेऽपि नमस्कारयोग्याः । नमेम नमस्करणीयान् इत्यस्माकं धर्मः ।

शिष्यः–कथयतु साधु' शब्दस्यापि अर्थम्, कृपास्ति यदि ते मयि?

गुरुः– साधनाशीलाः ये खलु श्रमणाः, अहिंसासत्यास्तेयापरि–ग्रहब्रह्मचर्य रूपान् पञ्च महाव्रतान् च ये निष्ठया परि–पालयन्ति तेहि साधवः । वयं साधूनपि श्रद्धया नमामः । वत्स ! उदारः खलु जैनधर्मः, अतः जैनधर्मावलम्बिनः नहि जैनाचार्यान् नहि जैनोपाध्यायान् नहि च जैन–साधून्नेव नमन्ति तेहि खलु उदारेण भावेन् सर्वान् आचार्यान्, सर्वान् उपाध्यायान् सर्वान् साधून् नमन्ति इत्येवास्ति जैनधर्मस्यौदार्यम् ।

शिष्य:—किं फलं लभतेऽनेन नमस्कारेण मानवः—

गुरुः— उक्तमस्य फलं भगवता महावीरेण प्राकृतभाषायामेव—

एसो पंच णमोक्कारो सव्वपावप्पणासणो ।
मंगलाणं च सव्वेसिं पढमं हवइ मंगलम् ॥

एषः पञ्चरूपात्मकः नमस्कारः सर्वेषां पापकर्मणां विनाशकः सर्वेषु मङ्गलविधायकेषु नमस्कार—मन्त्रेषु उत्तमं नमस्कारमन्त्रम्, अस्य हि श्रद्धयोच्चारणमात्रेण सर्वे जनाः मङ्गलं लभन्ते ।

शिष्यः—कृतार्थोऽस्मि देव ! ज्ञान—प्रदानरूपानुग्रहेण !
नमः गुरुभ्यः ।

अभ्यास—

(१) किं फलम् नमस्कारमन्त्रस्य ?
(२) कोऽर्थः अरिहन्त शब्दस्य ?
(३) किमस्ति जैनधर्मस्यौदार्यम् ?



## अष्टचत्वारिंशः पाठः

### देवदत्तस्य—आपणः

### ( व्यापारिक शब्द-राशिः )

दिल्लीनगरेऽस्ति एकः विपणिः, यो हि 'खारी बावली' नाम्ना प्रसिद्धः । तस्मिन्विपणौ अस्ति देवदत्तस्य पंजीकृतः आपणः, देवदत्तः प्रसिद्धः खलु आपणिकः । कोटिप्रमाणेन मूलधनेन तेन व्यापारः आरब्धः, साम्प्रतम् अस्ति तस्य आपणस्य शतकोटिप्रमाणं अनुमानितं मूल्यम् ।

देवदत्तस्यास्ति अन्नस्य अभिकरणम्, सः गोधूमानां वस्त्राणाञ्च मुख्यः अभिकर्ता अस्ति ।

सः अधमर्णेभ्यः ऋणमपि यच्छति तस्य च कुसीदम् गृह्णाति ।

देवदत्तस्य संग्रहणे गोधूमस्य शणपुटीनां अस्ति महान् राशिः। अपरे संग्रहणे शणपुटैः बद्धानि नानाविधानि पाश्चत्येभ्यो देशेभ्यो आयातितानि वस्त्राणि सन्ति। सः गोधूमानां निर्यातमपि करोति।

सः तदा पण्यानां संग्रह करोति यदा पण्यानां अर्घापचितिः भवति। अर्घापचितौ सः पण्यानि विक्रीणाति, तेन सः लाभं अधिगच्छति।

सः ग्राहकेभ्यः ऋणत्वेनापि पण्यानि यच्छति मौद्रिकत्वेनापि च। सः ऋणत्वेन दीयमानानां पण्यानां विवरणं मूल्यञ्च मौद्रिकपत्रं लिखित्वा ग्राहकेभ्यः यच्छति, ते च सद्यः एव वस्तुमूल्यं मुद्राभिः मुद्रापत्रैश्च तस्मै प्रयच्छन्ति।

ऋणत्वेन दीयमानानां पण्यानां विवरणं मूल्यञ्च ऋणपत्रे संलिखति, तत् च ग्राहकः हस्ताक्षरेण प्रमाणीकरोति, तदा सः तस्य प्रतिलिपि ग्राहकाय यच्छति। सः कालान्तरे मूल्यं प्रेष्यति।

अल्पं पण्यं ग्राहकाः स्वयमेव नयन्ति, ईषदधिकं भारवाहकैः नयन्ति, अधिकं लघुशकटैः, शकटैः, अश्वशकटैः, आश्वकैः ट्रकयानैश्च नयन्ति।

एकदा देवदत्तस्य पण्यानि करशालिकेन करशालिकायां अवरुद्धानि, तदा देवदत्तस्य कर्मचारी तत्र गतः, करं च दत्त्वा पण्यानि आनयत्। करस्य प्राप्तिपत्रं च तेन आनीतम् देवदत्तस्यावलोकनाय।

देवदत्तः आयकरं, विक्रयकरं, आयातशुल्कं, निर्यातशुल्कञ्च राज्याय प्रयच्छति। आयकर-निर्धारणं आयकरस्य उच्चाधिकारी ताभिः पंजिकाभिः करोति, यासु देवदत्तस्य लेखाकारः आय-व्यय विवरणं लिखति।

देवदत्तस्य सन्ति अनेके कर्मचारिणः वैतनिकाः दैनिकादेयाश्च। तेषामस्ति उपस्थितिपंजिकापि, यस्यां कर्मचारिणामुपस्थित्यनुपस्थित्यौ अङ्किते भवतः। तेनैव तेभ्यः देयस्य धनस्य गणनाकरोति लेखाकारः।

अनेके व्यापारिणः दूरभाषेनैव देवदत्ताय आदेशं यच्छन्ति, सोऽपि आदेशानुकूलानि पण्यानि वैवरणिकम् च तेभ्यः प्रेष्यति।

देवदत्तस्य भ्राता अस्ति आदायजीवकः सः आदेयं गृहीत्वा पण्यानि विक्रीणाति। सः सर्वेषां विश्वस्तः अस्ति यतो हि सः नास्ति कैतवी।

पुरतः याः काष्ठिकाः सन्ति, तासु चान्द्रलौहेषु च भारितानि सन्ति नानाविधानि द्रव्याणि, यानि व्यापारार्थं तत्र स्थापितानि सन्ति ।

देवदत्तस्य तस्यानुजस्य स व्यापार. अस्ति उत्तरोत्तर-संवृद्धः ।

अभ्यास—इस पाठ में व्यापार में प्रयुक्त होनेवाले शब्दों का ज्ञान कराया गया है, उनके अर्थ याद कीजिए :—

| | | | |
|---|---|---|---|
| विपणिः | बाजार | निर्यातम् | एक्सपोर्ट (बाहर भेजना) |
| पंजीकृतः | रजिस्टर्ड | पण्यानां | बेचने की वस्तुओं का |
| आपणः | दुकान | अर्घापचितिः | मन्दी |
| आपणिकः | दुकानदार | अर्घापच्चितिः | तेजी |
| मूलधनम् | मूलधन | ऋणत्वेन | उधार |
| अनुमानितं मूल्यम् | वैल्यू | मौद्रिकत्वेन | कैश |
| अभिकरणम् | एजेन्सी | मौद्रिकपत्रम् | कैशमेमो |
| अधिकर्ता | एजेन्ट | मुद्राभिः | करेन्सी के द्वारा |
| गोधूमानां | गेहूं का | मुद्रापत्रैः | नोटों के द्वारा |
| अधमर्णः | कर्जा लेनेवाला | विवरणम् | खुलासा (पर्टिकुलर्स) |
| कुसीदम् | ब्याज-सूद | प्रमाणीकरोति | तसदीक करता है |
| सङ्ग्रहण | स्टोर | प्रतिलिपि | डुप्लीकेट कापी |
| शणपुटी | बोरी | प्रेष्यति | भेजता है |
| शणपुट | बोरा | अल्पं | थोडा |
| आयातितानि (विदेश से मंगाया हुआ) | इम्पोर्टेड | ईषदधिकम् | थोडा-बहुत |
| | | अधिकम् | ज्यादा |
| लघुशकटम् | हाथ रेहडी | आयकरः | इन्कम टैक्स |
| शकटम् | बैलगाडी | विक्रयकरः | सेल टैक्स |
| अश्वशकटम् | घोडे वाला रेहडा | आयात शुल्कम् | लाने की चुंगी |

| | | | |
|---|---|---|---|
| आश्विकम् | तांगा | निर्यात शुल्कम् | बाहर भेजने की चुंगी |
| ट्रकयानम् | ट्रक | आयकर निर्वारणम् | टैक्स निश्चित करना |
| करशालिकाः | चुंगी अधिकारी | उच्चाधिकारी | ऑफिसर |
| करशालिका | चुंगी | पञ्जिका | रजिस्टर |
| प्राप्तिपत्रम् | पहुँच (रसीद) | लेखकारः | मुनीम |
| आय-व्यय-विवरणम् | लेखा-जोखा | वैतनिकः | वेतन पर काम करने वाला |
| उपस्थिति-पञ्जिका | हाजिरी रजिस्टर | दैनिकादेयः | रोज की मजदूरी पर काम करने वाला |
| दूरभाषः | टेलीफोन | आदेशः | आर्डर |
| वैवरणिकम् | विल | आदाय जीवकः | कमीशन एजेन्ट |
| विश्वस्तः | विश्वासपात्र (ईमानदार) | आयदेम् | कमीशन |
| कैतवी | बेईमान | काष्ठिकाः | लकडी की पेटियाँ |
| चान्द्रलौहम् | कनस्तर | भरितानि | भरे हुए |
| उत्तरोत्तर-संवृद्ध | प्रतिदिन वढता हुआ | | |

## कुछ अन्य व्यापारिक शब्द

| | | | |
|---|---|---|---|
| तुला | तराजू | आदेशपत्रम् | आर्डर फार्म |
| तोलकम् | कांटा | उपहारः | भेट |
| साक्षिकः,प्रतिभूः | गवाह | धनराशिः | रकम |
| दण्डः | जुर्माना | वणिक् पंजिका | बही |
| तोलनम् | तोलना | नीलिका | नीली स्याही |
| मूल्यम्, शुल्कम् | दाम | रक्तिका | लाल स्याही |
| तुलामानम् | बाट | धारालेखनी | फाउन्टेन पेन |



# नवचत्वारिंशः पाठः

## (जातिवाचक-शब्दाः)

कोऽस्त्ययम् ?

अयं अस्ति तक्षकः । सः क्रकचेन काष्ठं कृन्तति, आविधेन काष्ठं छिद्रं करोति, तक्षण्या च काष्ठं तक्षति ।

कोऽस्त्ययम् ?

अयमस्ति कुलालः । स आपाके घटान्, इष्टकाः, शरावकान् च संपचति । चक्रे मृत्पिण्डं च स्थापयित्वा यथाभिलषितानि पात्राणि रचयति ।

कोऽस्त्ययम् ?

अयमस्ति सौचिकः, यः सीवनयन्त्रेण वस्त्राणि सीव्यति सूचिकया च सूत्रशिल्पमपि करोति । सूचिकर्म एव अस्य वृत्तिः ।

कोऽस्त्ययम् ?

अयमस्ति चर्मकारः, यः चर्मणा पदत्राणानि रचयति, मम श्यामे उपानहौ अनेनैव रचिते ।

कोऽस्त्ययम् ?

अयं स्थपतिः । एषः इष्टकाभिः आश्मिकेन च भवनानि रचयति । अस्माकं भवनं अनेनैव रचितम् । कुशलोऽयं स्थपतिः ।

कोऽस्त्ययम् ?

अयमस्ति तैलिकः । अयं तैलयन्त्रेण तिलेभ्यः तैलम् स्त्रावयति । पुष्पाणि तैलञ्च युगपदेव पक्त्वा सुगन्धतैलं च आविष्करोति ।

कोऽस्त्ययम् ?

अयमस्ति लौहकारः, अयं लौहेन, क्रकचानि हलानि च

रचयति । आदौ लौहं अग्निना तापयति, तप्तं लौहं अयोघनेन पुनः पुनः ताडयति तेन यथाभिलषितानि वस्तूनि रचयति : अयं परशुः अयं कटाहश्च, अनेनैव निर्मितः ।

कोऽस्त्ययम् ?

अयमस्ति नापितः । अयं क्षुरेण केशान् मुण्डयति, कर्तन्या च केशान् कर्तित्वा केशश्रृंगारं रचयति । एषः केशकर्तनयन्त्रेणापि केशान् कृन्तति । केशप्रसाधनानि कृत्वा एषः मुकुरं दर्शयति, मुकुरे स्वकीयं केशश्रृंगारं दृष्ट्वा जनाः प्रमुदिताः भवन्ति ।

**अन्य शब्द—**

| | | |
|---|---|---|
| क्षुरकम्- ब्लेड | ऐन्द्रजालिकः—मदारी | शौण्डिकः—कलाल |
| उपक्षुरम्- सेफ्टी रेजर | अहितुण्डिक—सपेरा | कारुकः—कारीगर |
| रजकः- रगरेज | मालाकारः—माली | कृषकः—किसान. |
| तन्तुवायः- जुलाहा | नाविकः—केवट | क्षेत्रम्, केदारः—खेत |
| समार्जकः- मेहतर | अरित्रम्—चप्पू | खनित्रम्-फावडा |
| मार्जनी- झाडू | नौका-नाव | वृश्चनः—छेनी |
| कण्डोलः- टोकरी | जलवाहः-कहार | द्रावकः—मोम |
| रजकः- धोबी | चित्रकारः—चित्रकार | व्यंगचित्रम्-कार्टून |

**पाठ में प्रयुक्त शब्दों के अर्थ—**

| | |
|---|---|
| तक्षकः (प्र०)—बढई | तैलिकः— (प्र०)—तेली |
| क्रकचेन (तृ०)—आरे से | तैलयन्त्रेण (तृ०)—कोल्हू से |
| आविधेन (आविधम् तृ०)—वरमे से | युगपदेव (अव्य०)—एक साथ ही |
| तक्षण्या—(तक्षणी तृ०)—वसूले से | लौहकारः (प्र०)—लुहार |
| तक्षति—छीलता है | अयोघनेन (तृ०)—हथोडे से |
| कुलालः (प्र०)—कुम्हार | परशु. (प्र०)—कुल्हाडा |
| आपाके (स०)—आवे में | कटाहः (प्र०)—कडाहा |

इष्टकाः (द्वि०)–ईंटें
शरावकान् (द्वि०)–सकोरे
सौचिकः (प्र०)–दर्जी
सीवन–यन्त्रेण (तृ०)–दर्जी की मशीन
सूत्र–शिल्यम् (तृ०)–कढाई
सूचिकया (द्वि०)–सुई से
वृत्तिः (प्र०)–रोजी
पदत्राणानि (द्वि०)–जूते
स्थपतिः (प्र०)–राज
आश्मिकेन (तृ०)–सीमेंट से

नापितः (प्र०)–नाई
क्षुरेण (तृ०)–उस्तरे से
कर्तन्या (तृ०)–कैंची से
केशकर्तनयन्त्रेण (तृ०) बाल काटने की मशीन
मुकुरं (द्वि०) शीशा
सूचीकर्म (प्र०)–सिलाई
चर्मकारः (प्र०)–चमार
उपानहौ (द्वि०)-बूटों की जोडी
इष्टकाभिः (तृ०)–इंटों से

## सम्बन्ध–सूचक शब्द

| | | | |
|---|---|---|---|
| प्रपितामहः | परदादा | श्वसुरः | ससुर |
| प्रपितामही | परदादी | श्वश्रूः | सास |
| पितामहः | दादा | देवरः | देवर |
| पितामही | दादी | ननन्दा | ननद |
| जनकः, पिता | पिता | जामाता | जवाई |
| जननी, माता | माता | आवुत्तः | बहनोई |
| पितृव्यः | चाचा | श्यालः | साला |
| पितृव्या | चाची | श्याला | साली |
| पितृव्यः | ताया | भागिनेयः | भानजा |
| पितृव्या | ताई | भागिनेयी | भानजी |
| अग्रजः | बडा भाई | पितृष्वसा | बूआ |
| भ्रातृजाया | भाभी | पितृष्वसृपतिः | फूफा |

| | | | |
|---|---|---|---|
| अनुजः | छोटा भाई | मातृष्वसृपतिः | मौसा |
| अग्रजा | बडी बहिन | मातृष्वसा | मौसी |
| अनुजा | छोटी बहिन | दौहित्रः | दोहता |
| भ्रातृजा | भतीजी | मातृष्वस्त्रीयः | मौसी का बेटा |
| भ्रात्रीयः | भतीजा | मातुलः | मामा |
| पुत्रः, सुतः | बेटा | मातुली | मामी |
| पुत्री, सुता | बेटी | मातामहः | नाना |
| पौत्रः | पोता | मातामही | नानी |
| पौत्री | पोती | भार्या, अर्धांगिनी | पत्नी |

## शृंगार प्रसाधनों के लिये शब्द

| | | | |
|---|---|---|---|
| दर्पणः, मुकुरः | आयना | गन्धतैलम् | इत्र |
| कंकतिका, प्रसाधनिका | कंघी | कज्जलम् | काजल |
| शृंगार-पीठम् | ड्रेसिंग टेबल | शृंगाराधानम् | सिंगारदान |
| रोममार्जक | ब्रुश | दन्तमार्जकम् | दांत का ब्रुश |
| स्नेह्यम् | क्रीम | हैमम् | स्नो |
| फेनिलम् | साबुन | सौन्दर्य-बिन्दुः | ब्यूटी स्पॉट |
| मञ्जनम् | मंजन | नखरंजिका | नेल पालिश |
| ओष्ठरंजिका | लिपस्टिक | गान्धिकम् | पाउडर |
| तिलकम् | बिन्दी | कपोलरंजनम् | लाली |

## आफिस के लिये शब्द

| | | | |
|---|---|---|---|
| कार्यालयः | आफिस | प्रतिहारी | अर्दली |
| प्रबन्धकः | मैनेजर | भृत्यः | चपरासी |
| लेखापालः | कैशियर | पंजिका | रजिस्टर |
| भृत्यः | नौकर | मसिपात्रम् | दवात |
| वेतनम् | वेतन | आसन्दिका | कुर्सी |

| | | | |
|---|---|---|---|
| वैतनिकः | वेतन पर काम करने वाला | दैनिकदेयः | रोज की मजदूरी पर काम करने वाला |
| कृतपीठम् | टेबल | धारालेखनी | फाउन्टेन पेन |
| दैनन्दिनी | डायरी | दूरभाषः | टेलीफोन |
| पदयानम | साइकिल | लिपिकः | क्लर्क |
| पदयानिकः | साइकिलिस्ट | प्रधानलिपिकः | हेड क्लर्क |
| पुस्तकाधानम् | बुकरैक | उपस्करः | फर्नीचर |
| कोषिका | फाइल | संवेश | स्टूल |

## विद्यालय में प्रयुक्त शब्द

| | | | |
|---|---|---|---|
| आचार्यः | प्रिंसिपल | प्रबन्धकः | मैनेजर |
| उपाचार्यः | वाइस-प्रिंसिपल | कुलपतिः | चांसलर |
| अध्यापकः | टीचर | प्राध्यापकः | प्रोफेसर |
| छात्रः (पु०) | स्टुडेंट | उच्चतर माध्यमिक विद्यालय | हायर सेकेन्ड्री स्कूल |
| छात्रा (स्त्री०) | ,, | | |
| पाठशाला | स्कूल | प्रावरणम् | जिल्द |
| विद्यालयः | हाईस्कूल | यशदिका | पेंसिल |
| महाविद्यालयः | कालेज | लेखनी | कलम |
| विश्वविद्यालयः | यूनिवर्सिटी | मसिः | स्याही |
| पाठ्यपुस्तकम् | कोर्सबुक | धारालेखनी | फाउन्टेन पैन |
| लिपिकः | क्लर्क | संचिका | कापी |
| प्रधान लिपिकः | हैड क्लर्क | अश्मिका | स्लेट |
| पंजिका | रजिस्टर | अवकाशवेला | छुट्टी का समय |
| उपस्थिति-पंजिका | हाजिरी रजिस्टर | दैनन्दिनी | डायरी |
| समय-सारिणी | टाइम टेबल | अनुशासनम् | डिसीप्लिन |
| कक्षा | क्लास | कागदम् | कागज |

| | | | |
|---|---|---|---|
| सहपाठी, सतीर्थ्य: | क्लासफैलो | मार्जक: | रबड |
| वेष्टनम् | बस्ता | महासन्दिका | बेंच |
| आसन्दिका | कुर्सी | लेखपीठम् | डेस्क |
| संवेश: | स्टूल | कृतपीठम् | मेज |
| उपस्कर: | फर्नीचर | पुस्तकाधानम् | बुकरैक |
| काष्ठाधानम् | अलमारी | प्रमार्जक: | डस्टर |
| श्वेतिका | चाक | कोषिका | फाइल |
| श्यामपट्ट: | ब्लैक,बोर्ड | मसिपात्रम् | दवात |
| लेखनीमुखम् | निब | अंका: | नम्बर |
| पृष्ठम् | पेज | अवकाश: | छुट्टी |
| उपस्थिति: | हाजिरी | अनुपस्थिति: | गैरहाजिरी |

## पात्राणि

| | | | |
|---|---|---|---|
| हसन्ती | अंगीठी | कंस: | गिलास |
| चुल्ली | चूल्हा | काचकंस: | कांच का गिलास |
| धिषणा | परात | कटोरकम् | कटोरा |
| ऋजीषम् | तवा | कटोरिका | कटोरी |
| दर्वी | कडछी | चषक: | प्याली |
| स्थाली | पतीली | स्थालिका | थाली |
| स्वेदनी | कडाही | शराव: | प्लेट |
| सन्दंश: | चिमटा | निष्कलंकआयस-पात्रम् | स्टेनलैस स्टील के बर्तन |
| करक: | लोटा | | |
| द्रोणक: | टब | महाचषक: | जग |
| धावनी | चिलमची | कुम्भ: | घडा |
| उदञ्चनम् | बाल्टी | उद्ध्मानम् | स्टोव |
| चमस: | चम्मच | | |

## खाद्य–भोज्यानि

| | | | |
|---|---|---|---|
| महानसम् | रसोई घर | गोधूमः | गेहूं |
| पाकशाला | रसोई घर | यवः | जौ |
| ईन्धनम् | ईंधन | चणकः | चने |
| अंगारकम् | अंगारे | आलुः (पु०) | आलू |
| दारुः | लकडी | शस्यम् | मकई |
| अंगारकीयम् | कोयला | चणकीयः | बेसन |
| लवणम् | नमक | गोधूमीयः | आटा |
| मरीचम् | मिर्च | कृशरा | खिचडी |
| हरिद्रा | हल्दी | गोभिका | गोभी |
| व्यंजनम् | मसाला | सौरभम् | गर्म मसाला |
| हिंगु | हींग | प्रियङ्गुः | बाजरा |
| पूगीफलम् | सुपारी | माषः | उडंद |
| एलाफलम् | इलायची | मुद्ग | मूंग |
| जीरकम् | जीरा | गृंजनम् | गाजर |
| दारुत्वचम् | दालचीनी | पलाण्डुः | प्याज़ |
| पक्वान्नम् | पका अन्न | दुग्धम् | दूध |
| आमान्नम् | कच्चा अन्न | दधि | दही |
| जालिनी | तोरडी | नवनीतम् | मक्खन |
| ताम्बूलम् | पान | तक्रम् | लस्सी |
| वास्तुकम् | बथुवा | पालकी | पालक |
| अलाबुः | कद्दू | वृन्तम् | डंठल |
| पायसम् | खीर | अपूपिका | पूडी |
| रोटिका, पोलिका | रोटी | अपूपः | पूडा |
| आर्द्रकम् | अदरक | जम्बीरः | नींबू |

| | | | |
|---|---|---|---|
| सन्धानम् | अचार | लशुनम् | लहसन |
| आढकीदलम् | अरहर-दाल | टिंडिशः | टिंडा |
| कूष्माण्डम् | पेठा | कारवेल्लम् | करेला |
| कर्कटी | ककडी | तुम्बी | घीया |
| चर्मटी | खीरा | वृन्ताकम् | बैंगन |
| भिण्डिका | भिंडी | रक्तालुः | टमाटर |
| मूलिका | मूली | श्वेतकन्दम् | शलजम |
| पर्णम् | पत्ते | गोधूमपाकः | हलवा |
| ओदनम् | भात | | |

## शरीर के अंग

| | | | |
|---|---|---|---|
| शीर्षम् | सिर | कर्णः, श्रुतिः | कान |
| केशाः | बाल | ग्रीवा, कण्ठः | गर्दन |
| ललाटम् | माथा | कपोलः | गाल |
| कटिः श्रोणिः | कमर | पृष्ठम् | पीठ |
| भ्रूः (स्त्री०) | भौंहें | वक्षस्थलम् | छाती |
| लोचनम्, नेत्रम् | नेत्र | भुजा | बाहें |
| पक्ष्म (नपुं०) | पलक | करः, पाणिः | हाथ |
| पक्ष्मरोम (नपुं०) | पलक-रोम | अंगुलिः | अंगुली |
| नासिका | नाक | अंगुष्ठः | अगूठा |
| मुखम्, आस्यम् | मुख | तर्जनी | अंगूठे के साथ की अंगुली |
| दन्ताः, दशनाः | दांत | मध्यमा | बीज की अंगुली |
| ओष्ठः, अधरः | ओठ | अनामिका | बीच के साथ की |
| चिबुकः, | ठोडी | कनिष्ठिका | छोटी अंगुली |
| जिह्वा, रसना | जीभ | करतलम् | हथेली |

| | | | |
|---|---|---|---|
| नाक्तिकम् | नाइटड्रेस | तिरस्करिणी | परदा |
| तूलसन्तरणम् | गद्दा | कम्बलः | कम्बल |

## सेना—सम्बन्धी शब्द

| | | | |
|---|---|---|---|
| आहवः, संगरः | युद्ध | जलपोतः | पानी का जहाज |
| परमाण्वस्त्रम् | एटम बम | वाष्पपरमाण्वस्त्रम् | हाईड्रोजन बम |
| खड्गः, करवालः | तलवार | भुशुंडिः | बन्दूक |
| भुशुंडिका | पिस्तौल | शतघ्नी | तोप |
| गुलिका, सीसिका | गोली | लौहिकम् | गोला |
| लक्ष्यम् | निशाना | आयुधम्, शस्त्रास्त्रम् | हथियार |
| जलान्तरितपोत | पनडुब्बी | आग्नेयास्त्रम् | बम |
| जीपयानम् | जीप | कवचयानम् | बखतरबंद गाडी |
| पटगृहम् | तम्बू, टैंट | अतन्त्रभाषिन् | वायरलेस |
| युद्धपोतः | लडाकू जहाज | वायुयानः | हवाई जहाज |
| वायवीयाक्रमणम् | हवाई हमला | आक्रमणम् | हमला |
| वैजयन्ती | झंडा | व्यूह-रचना | मोर्चाबन्दी |
| सैनिकः | फौजी | सैन्यवेषः | वर्दी |
| शिरस्त्राणम् | लोहे का टोप | संवेषः | यूनिफार्म |
| शवः | लाश | आग्नेयचूर्णम् | बारूद |
| करलौहिकम् | हथगोला | सीसिकावर्षिणी | मशीनगन |
| प्रक्षेपास्त्रम् | मिसाइल | आकाशवाणिकः | रेडियो |
| शिविर | छावनी | आयुधागारम् | बारूदखाना |
| स्थलसेनाध्यक्षः | पैदल सेना का सेनापति | वायुसेनाध्यक्षः | हवाई सेना का सेनापति |
| जलसेनाध्यक्षः | जलसेना का सेनापति | सेनारक्षिन् | मिलिट्री पुलिस |

| | | | |
|---|---|---|---|
| स्वचालितम् | आटोमैटिक | सेनापतिः | मेजर |
| उपसेनापतिः | कैप्टन | पदातिः | पैदल सैनिक |
| अश्वारोहः | घुडसवार | आक्रमणसूचकः | राडार |
| वायुयानघ्नी | विमानभेदी तोप | शल्यम् | बरछी |
| गुप्तचरः | जासूस | पदाभिधानम् | रैंक |

## सामान्य प्रयोग के शब्द

### पुलिस ●

| | |
|---|---|
| आरक्षण-विभागः | पुलिस |
| आरक्षी (आरक्षिन्) | सिपाही |
| आरक्षणसंस्थानम् | थाना |
| आरक्षणाधिपः | थानेदार |
| कारावासः | कैद |
| दण्डः | जुर्माना |
| अश्रुस्राविकम् | टीयर गैस |
| कारा | जेल |
| कारागारः | जेलखाना |
| उत्कोचः | रिश्वत |

### ● संसदीय

| | |
|---|---|
| संसद् | पार्लियामेंट |
| राज्य-सभा | राज्य-सभा |
| लोक-सभा | लोक-सभा |
| विधान-सभा | विधान-सभा |
| सदस्यः | मेम्बर |
| प्रमुखमन्त्री | प्राइममिनिस्टर |
| प्रधान सचिव | चीफ मिनिस्टर |

### ● यात्रा-सम्बन्धी

| | |
|---|---|
| रेलयानम्, वाष्पयानम् | रेल |
| आयसिका | लाइन |
| शृंखलकम् | सिगनल |
| यात्रापत्रम् | टिकट |
| पारपत्रम् | पासपोर्ट |
| संस्थानम् | स्टेशन |
| मोटरयानम् | मोटर |

### कार्पोरेशन ●

| | |
|---|---|
| नगरम् | शहर |
| नगर-निगमः | कार्पोरेशन |
| निगमाध्यक्षः | मेयर |
| विद्युद्विभागः | बिजली-विभाग |

| | | | |
|---|---|---|---|
| विद्युत्संस्थानम् | इलैक्ट्रिक स्टेशन | मोटर-यानिका | मोटर साईकल |
| उपविद्युत्संस्थानम् | सबइलैक्ट्रिक स्टेशन | पदयानम् | साइकिल |
| निगम-पार्षदः | कार्पोरेशन मेम्बर | चालकः | ड्राइवर |

## डाकखाने के लिये उपयोगी शब्द

| | | | |
|---|---|---|---|
| पत्रालयः | पोस्ट ऑफिस | विद्युत्सन्देशः | तार |
| पत्रालयाध्यक्षः | पोस्ट मास्टर | धनादेशः | मनिआर्डर |
| अन्तः-पत्रम् | लिफाफा | आदायादेशः | वी. पी. |
| पत्रम् | पोस्ट कार्ड | पत्राचारः | पत्र-व्यवहार |
| अन्तर्देशीय पत्रम् | इन्लैण्ड लैटर | पत्रमंजूषिका | लैटर बक्स |
| पञ्जीकृतम् | रजिस्टर्ड | पत्रवाहकः | पोस्ट-मैन |
| पञ्जीकरणम् | रजिस्ट्रेशन | त्वरीयपत्रम् | एक्सप्रेस |
| मुद्रीयम् | टिकट (स्टैम्प) | वायवीयपत्रम् | हवाई डाक |
| मुद्राङ्कितम् | स्टैम्प्ड | | |

